## अथ बगलामुखी देवी मन्त्रप्रयोग

प्रथम आचमनादि करके पीला फूल हाथ में लेकर कूर्म मुद्रा से भगवती बगला का ध्यान करें ।

**ऊँ मध्ये सुधाब्धि मणिमण्डप रत्नवेद्यां,**
**सिंहासनो परिगतां परिपीत वर्णाम् ।**
**पीताम्बरा भरण माल्य-विभूषिताङ्गीं,**
**देवीं स्मरामि धृत मुद्गर-वैरिजिह्वाम् ।**
**जिह्वाग्रमादाय करेण देवीं**
**वामेन् शत्रून् परिपीडयन्तीम् ।**
**गदाभिघातेन च दक्षिणेन,**
**पीताम्बराढ्यां द्विभुजां नमामि ।**

ध्यान करके उस पुष्प को अपने मस्तक पर रखकर मानसोपचार पूजन करके हाथ में जल लेकर बगलामुखी मन्त्र का उच्चारण कर विनियोग पाठ करें।

### मन्त्र-

**ऊँ ह्रीं बगलामुखि ! सर्वदुष्टानां वाचंमुखं पदं स्तम्भय । जिह्वां कीलय कीलय बुद्धिं नाशय ह्रीं ऊँ स्वाहा ॥**

### विनियोग-

**ऊँ बगलामुखी मन्त्रस्य नारद ऋषिः, त्रिष्टुप्छन्दः बगलामुखी देवता ह्रीं बीजम्, स्वाहा शक्तिः, ममाऽभीष्ट सिद्ध्यर्थे जपे विनियोगः ॥ जल छोड़ें ।**



### ऋष्यादि न्यास :-

**ऊँ नारद ऋषये नमः-शिरसि । ऊँ त्रिष्टुप्छन्दसे नमः-मुखे। ऊँ बगलामुख्यै देवतायै नमः-हृदि । ऊँ ह्रीं बीजाय नमः-गुह्ये। ऊँ स्वाहा शक्त्यै नमः-पादयोः ॥**

### करन्यास :-

**ऊँ ह्रीं अंगुष्ठाभ्यां नमः । ऊँ बगलामुखी तर्जनीभ्यां स्वाहा । ऊँ सर्वदुष्टानां मध्यमाभ्यां वषट् । ऊँ वाचं मुखं पदं स्तम्भय अनामिकाभ्यां हूम। जिह्वां कीलयकीलय कनिष्ठिकाभ्यां वौषट। ऊँ बुद्धिं नाशय ह्रीं ऊँ स्वाहा करतलकर पृष्ठाभ्यां अस्त्राय फट्।**

### हृदयादि न्यासः-

**ऊँ ह्रीं हृदयाय नमः। ऊँ बगलामुखि ! शिरसे स्वाहा । ऊँ सर्वदुष्टानां शिखायै वषट् । ऊँ वाचं मुखं पदं स्तम्भय- कवचाय हूम्। ऊँ जिह्वां कीलयकीलय नेत्रत्रयाय वौषट् । ऊँ बुद्धिं नाशय ह्रीं ऊँ स्वाहा अस्त्राय फट् ॥**

### ततो मन्त्राक्षर न्यासः-

**ऊँ नमः मूर्ध्नि । ऊँ ह्रीं नमः-भाले । ऊँ बं नमः-दक्षिण नेत्रे । ऊँ गं नमः-मूर्ध्नि । ऊँ लां नमः-दक्षिण कर्णे । ऊँ मुं नमः वाम कर्णे ऊँ खीं नमः-दक्षिण कपोले । ऊँ सं नमः-वाम कपोले। ऊँ र्वं नमः-दक्षिणनासापुटे। ऊँ दुं नमः- वामनासापुटे । ऊँ ष्टां नमः-उर्ध्वोष्ठे**

ऊँ नां नमः-अधरोष्ठे । ऊँ वां नमः-मुखवृत्तौ। ऊँ चं नमः-दक्षिण स्कन्धे ऊँ मुं नमः-वाम स्कन्धे । ऊँ खं नमः-दक्षिण कूर्परे । ऊँ पंन्नमः-दक्षिण मणिबन्धे । ऊँ दं नमः-दक्षिणाङ्गुलिमूले । ऊँ स्तं नमःगले ऊँ भं नमः-दक्षिणस्तने । ऊँ यं नमः-वामस्तने । ऊँ जिं नमः-हृदि। ऊँ ह्वां नमः-नाभौ । ऊँ कीं नमः-कटिभागे। ऊँ लं नमः-गुह्ये। ऊँ यं नमः-वामकूर्परे। ऊँ बुं नमः-वाममणिबन्धे । ऊँ द्धिं नमः-वाम अंगुलिमूले । ऊँ वीं नमः-ऊरौ। ऊँ नां नमः-जंघयोः। ऊँ शं नमः-गुल्फे। ऊँ यं नमः-अंगुलिमूले । ऊँ स्वाहा नमः-सर्वाङ्गे।

पुनः भगवती का ध्यान करके षोडशोपचार या पञ्चोपचार से बाह्य पूजन कर माला की पूजा कर जप प्रारम्भ करें, जप समर्पण कर स्तोत्र कवच का पाठ करें ।

卐 卐 卐



## बगलामुखी स्तोत्र कवच प्रारम्भ :-

अथ बगलामुखीस्तोत्रम्

### विनियोग :

ऊँ अस्य श्री बगलामुखीस्तोत्रस्य नारदऋषिः श्री बगलामुखी देवता, मम सन्निहितानां वाङ्-मुख-पद-बुद्धीनां स्तम्भनार्थे विनियोगः।

### ध्यानम्

सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लसिनीं
हेमाभाङ्गरुचि शशाङ्क-मुकुटां सच्चम्पक-स्रग्युताम् ।
हस्तैर्मुद्गर-पाश-बद्ध-रसनां संबिभ्रतीं भूषणै-
र्व्याप्ताङ्गीं बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तये ॥
मध्ये सुधाब्धि-मणि-मण्डप-रत्नवेद्यां
सिंहासनोपरि-गतां परिपीतवर्णाम् ।
पीताम्बराभरण-माल्य-विभूषिताङ्गीं
देवीं भनामि धृत-मुद्ग र-वैरिजिह्वाम् ॥१॥
जिह्वाग्रमादाय करेण देवीं
वामेन शत्रून् परिपीडयन्तीम्
गदाभिघातेन च दक्षिणेन

पीताम्बराढ्यां द्विभुजां भजामि ॥२॥

चलत्कनक-कुण्डलोल्लसित-चारु-गण्डस्थलां
लसत्कनक-चम्पक-द्युति-मदिन्दु-बिम्बाननाम् ।
गदाहत-विपक्षकां कलित-लोल जिह्वां चलां
स्मरामि बगलामुखीं विमुख-वाङ्-मनःस्तम्भिनीम् ॥३॥

पीयूषोदधि-मध्य-चारु-विलस-द्रक्तोत्पले मण्डपे
सत्सिंहासन-मौलि-पातित-रिपुं प्रेतासनाध्यासिनीम्
स्वर्णाभां कर-पीडितारि-रसनां भ्राम्यद् गदां विभ्रमा-
मित्थं ध्यायति यान्ति तस्य विलयं सद्योऽथ सर्वापदः ॥४॥

देवि! त्वच्चरणाम्बुजाऽर्चनकृते यः पीत-पुष्पाञ्जलीं
भक्त्या वामकरे विधाय च जपन् मन्त्र मनोज्ञाक्षरम्
पीठध्यानपरोऽथ कुम्भकवशाद् बीजं स्मरेत् पार्थिवं
तस्यामित्रमुखस्य वाचि हृदये जाड्यं भवेत् तत्क्षणात् ॥५॥

वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः शीतति
क्रोधी शाम्यति दुर्जनः सुजनति क्षिप्रानुगः खञ्जति।
गर्वी खर्वविद्य जडति त्वद्न्त्रणा यन्त्रितः
श्रीनित्ये! बगला-मुखि! प्रतिदिनं कल्याणि! तुभ्यं नमः॥६॥

मन्त्रस्तावदलं विपक्षदलनं स्तोत्रं पवित्रं च ते
यन्त्रं वादि-नियन्त्रणं त्रिजगती जैत्रं च चित्रं च ते ।
मातः श्रीबगलेति नाम ललितं यस्याऽस्ति जन्तोर्मुखे
तन्नामग्रहणेन संसदि मुखस्तम्भो भवेत् वादिनाम् ॥७॥



दुष्ट-स्तम्भन-मुग्र विघ्न-शमनं दारिद्र्य-विद्रावणं
भूभृद्-भी शमनं चलन् मृगदृशां चेतः समाकर्षणम् ।
सौभाग्यैक-निकेतनं मम दृशः कारुण्यपूर्णामृतः
मृत्योर्मारणमाविरस्तु पुरतो मातस्त्वदीयं वपुः ॥८॥

मातर्भञ्जय मे विपक्ष-वदनं जिह्वां च संकीलय
ब्राह्मीं मुद्रय नाशयाऽऽशु धिषणामुग्रां गतिं स्तम्भय
शत्रूंश्चूर्णय देवि ! तीक्ष्ण-गदया गौराङ्गि! पीताम्बरे!
विघ्नौघं बगले ! हर प्रणमतां कारुण्यपूर्णेक्षणे ! ॥९॥

मातर्भैरवि! भद्रकालि! विजये ! वाराहि! विश्वाश्रये!
श्रीविद्ये समये! महेशि! बगले! कामेशि! रामे! रमे!
मातङ्गि! त्रिपुरे! परात्परतरे! स्वर्गापवर्गप्रदे !
दासोऽहं शरणागतः करुणया विश्वेश्वरि! त्राहि माम् ॥१०॥

संरम्भे चौरसङ्घे प्रहरण-समये बन्धने वारिमध्ये
विद्यावादे विवादे प्रकुपित-नृपतौ दिव्यकाले निशायाम्।
वश्ये वा स्तम्भने वा रिपुवध-समये निर्जने वा वने वा
गच्छंस्तिष्ठंस्त्रिकालं यदि पठति शिवं प्राप्नुयादाशु धीरः ॥११॥

नित्यं स्तोत्रमिदं पवित्रमिह यो देव्याः पठत्यादराद्
धृत्वा यन्त्रमिदं तथैव समरे बाहौ करे वा गले ।
राजानोऽप्यरवो मदान्धकरिणः सर्पा मृगेन्द्रादिका-
स्ते वै यान्ति विमोहिता रिपुगणा लक्ष्मीःस्थिराः सिद्धयः ॥१२॥

त्वं विद्या परमा त्रिलोक-जननी विघ्नौघ-सञ्छेदिनी
योषाकर्षण-कारिणी त्रिजगतांमानन्दसंवर्द्धिनी ।
दुष्टोच्चाटन-कारिणी जनमनः सम्मोह-संदायिनी
जिह्वा-कीलन-भैरवी विजयते ब्रह्मादिमन्त्रो यथा ॥१३॥

विद्या लक्ष्मीः सर्वसौभाग्यमायुः
पुत्रैः पौत्रैः सर्व-साम्राज्य-सिद्धिः।
मानं भोगो वश्य-मारोग्य-सौख्यं
प्राप्तं तत् तद् भूतलेऽस्मिन् नरेण ॥१४॥

यत्कृतं जपसन्नाहं गदितं परमेश्वरि!
दुष्टानां निग्रहार्थाय तद् गृहाण नमोऽस्तु ते ॥१५॥

ब्रह्मास्त्रमिति विख्यातं त्रिषु लोकेषु विश्रुतम् ।
गुरुभक्ताय दातव्यं न देयं यस्य कस्यचित् ॥१६॥

पीताम्बरां च द्विभुजां त्रिनेत्रां गात्रकोज्ज्वलाम् ।
शिला-मुद्गर हस्तां च स्मरेत्तां बगलामुखीम् ॥१७॥

इति रुद्रयामलस्थ-बगलामुखीस्तोत्रं समाप्तम् ।

卐 卐 卐



## अथ बगलामुखीकवचम्

कैलासाचल-मध्यगं पुरवह शान्तं त्रिनेत्रं शिवं
वामस्था कवचं प्रणम्य गिरिजा भूतिप्रदं पृच्छति।

पार्वत्युवाच-

देवी श्रीबगलामुखी रिपुकुलारण्याग्निरूपा च या ।
तस्याश्चाप-विमुक्त-मन्त्रसहितं प्रीत्याऽधुना ब्रूहि माम् ॥१॥

श्री शङ्कर उवाच-

देवि! श्रीभववल्लभे! श्रृणु महामन्त्रं विभूतिप्रदं
देव्या वर्मयुतं समस्त-सुखदं साम्राज्यदं मुक्तिदम् ।
तारं रुद्रवधूं विरञ्चि-महिला-विष्णुप्रिया-कामयुक्
कान्ते! श्रीबगलानने! मम रिपुं नाशाय युग्मं त्विति ॥२॥

ऐश्वर्याणि पदं च देहि युगलं शीघ्रं मनोवाञ्छितं
कार्यं साधय युग्मयुक्छिववधू वह्निप्रियान्तो मनुः ।
कंसारेस्तनयं च बीजमपरा शक्तिश्च वाणी तथा
कीलं श्रीमति! भैरवर्षिसहितं छन्दोविराट्संयुतम् ॥३॥

स्वेष्टार्थस्य परस्य वेत्ति नितरां कार्यस्य सम्प्राप्तये
नानासाध्य-माहगदस्य नियतं नाशाय वीर्याप्तये ।
ध्यात्वा श्रीबगलाननां मनुवरं जप्त्वा सहस्राख्यकं

दीर्घैः षटकयुतैश्च रुद्रमहिला बीजैर्निवेश्याङ्गके ॥४॥

## ध्यानम्

सौवर्णासन संस्थितां त्रिनयनां पीतांशुकोल्लासिनीं
हेमाभाङ्गरुचि शशाङ्क-मुकुटां सच्चम्पक-स्रग्युताम् ।
हस्तैर्मुद्ग र-पाशबद्ध-रसनां संबिभ्रतीं भूषणै
र्व्याप्ताङ्गीं बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तये ॥

## विनियोगः

ॐ अस्य श्रीबगलामुखी ब्रह्मास्त्रमन्त्रस्य भैरवऋषिर्विराट् छन्दः श्री बगलामुखीदेवता, क्लीं बीजम्, ऐं शक्तिः, श्रीं कीलकं मम परस्य च मनोऽभिलषितेष्ट कार्यसिद्धये विनियोगः।

## ऋष्यादिन्यासः

शिरसि भैरवऋषये नमः। मुखे विराट्छन्दसे नमः। हृदि बगला मुखीदैवतायै नमः । गुह्ये क्लीं बीजाय नमः पादयोः ऐं शक्तये नमः। सर्वाङ्गे श्रीं कीलकाय नमः।

दाहिने हाथ में जल लेकर 'ॐ अस्य श्रीबगलामुखी ब्रह्मास्त्रमन्त्रस्य' से 'विनियोगः' तक कहकर जल छोड़ दे ।

उसके बाद 'शिरसि भैरवऋषये नमः' से 'श्री कीलकाय नमः'



तक उचारण कर ऋष्यादि न्यास करे ।

## करन्यासः

ॐ ह्रां अङ्गुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां नमः! ॐ ह्रूं मध्यमाभ्यां नमः । ॐ ह्रैं अनामिकाभ्यां नमः । ॐ ह्रौं कनिष्ठकाभ्यां नमः। ॐ ह्रः करतलकरपृष्ठाभ्यां नमः ।

## हृदयादिन्यासः

ॐ ह्रां हृदयाय नमः । ॐ ह्रीं शिरसे स्वाहा । ॐ ह्रूं शिखायै वषट्।
ॐ ह्रैं कवचाय हूम् । ॐ ह्रौं नेत्रत्रयाय वौषट्। ॐ ह्रः अस्त्राय फट्।

## मन्त्रोद्धारः

ॐ ह्रौं ऐं श्रीं क्लीं श्रीबगलानने ! मम रिपून् नाशय नाशय ममैश्वर्याणि देहि देहि शीघ्रं मनोवाञ्छितकार्यं साधय साधय ह्रीं स्वाहा ।

शिरो में पातु ॐ ह्रीं ऐं श्रीं क्लीं पातु ललाटकम् ।
सम्बोधनपदं पातु नेत्रे श्रीबगलानने ! ॥१॥

श्रुती मम रिपून् पातु नासिकां नाशयद्वयम्।
पातु गण्डौ सदा मामैश्वर्याण्यन्यं तु मस्तकम् ॥२॥

देहि द्वन्द्वं सदा जिह्वां पातु शीघ्रं वचो मम ।
कण्ठदेशं स नः पातु वाञ्छितं बाहुमूलकम् ॥३॥

कार्यं साधय द्वन्द्वं तु करौ पातु सदा मम ।
मायायुक्ता तथा स्वाहा हृदयं पातु सर्वदा ॥४॥

अष्टाधिकचत्वारिंशद् दण्डाढ्या बगलामुखी ।
रक्षां करोतु सर्वत्र गृहेऽरण्ये सदा मम ॥५॥

ब्रह्मास्त्राख्यो मनुः पातु सर्वाङ्गे सर्वसन्धिषु ।
मन्त्रराजः सदा रक्षां करोतु मम सर्वदा ॥६॥

ॐ ह्लीं पातु नाभिदेशं कटिं मे बगलाऽवतु ।
मुखी वर्णद्वयं पातु लिङ्गं मे मुष्कयुग्मकम् ॥७॥

जानुनी सर्वदुष्टानां पातु मे वर्णपञ्चकम् ।
वाचं मुखं तथा पादं षड्वर्णा परमेश्वरी ॥८॥

जङ्घा-युग्मे सदा पातु बगला रिपुमोहिनी ।
स्तम्भयेति पदं पृष्ठं पातु वर्णत्रयं मम ॥९॥

जिह्वां वर्णद्वयं पातु गुल्फौ मे कीलयेति च ।
पादोर्ध्वं सर्वदा पातु बुद्धिं पादतले मम ॥१०॥

विनाशय पदं पातु बुद्धीन्दियवचांसि मे ।
ह्लीं बीजं सर्वदा पातु पादाङ्गुल्योर्नखानि मे ॥११॥

सर्वाङ्गं प्रणवः पातु स्वाहा रोमाणि मेऽवतु ।
ब्राह्मी पूर्वदले पातु चाऽग्नेय्यां विष्णुवल्लभा ॥१२॥

माहेशी दक्षिणे पातु चामुण्डा राक्षसेऽवतु ।
कौमारी पश्चिमे पातु वायव्ये चापराजिता ॥१३॥

वाराही चोत्तरे पातु नारसिंही शिवेऽवतु ।



ऊर्ध्वं पातु महालक्ष्मीः पाताले शारदाऽवतु ॥१४॥

इत्यष्टौ शक्तयः पान्तु सायुधाश्च स-वाहनाः ।
राजद्वारे महादुर्गे पातु मां गणनायकः ॥१५॥

श्मशाने जलमध्ये च भैरवाश्च सदाऽवतु ।
द्विभुजा रक्तवसनाः सर्वाभरणभूषिताः ॥१६॥
योगिन्यः सर्वदा पान्तु महारण्ये सदा मम ।
इति ते कथितं देवि! कवचं परमाद्भुतम् ॥१७॥

श्री विश्वविजयं नाम कीर्ति-श्री विजयप्रदम् ।
अपुत्रो लभते पुत्रं धीरं शूरं शतायुषम् ॥१८॥

निर्धनो धनमाप्नोति कवचस्याऽस्य पाठतः ।
जपित्वा मन्त्रराजं तु ध्यात्वा श्रीबगलामुखीम् ॥१९॥

पठेदिदं हि कवचं निशायां नियमात्तु यः ।
यत् यद् कामयते कामं साध्याऽसाध्ये महीतले ॥२०॥

तत्तत्काममवाप्नोति सप्तरात्रेण शङ्करि ।
गुरुं ध्यात्वा सुरां पीत्वा रात्रौ शक्तिसमन्वितः ॥२१॥

कवचं यः पठेद् देवि! तस्याऽसाध्यं न किञ्चन ।
यं ध्यात्वा प्रजपेन्मन्त्रं सहस्त्रं कवचं पठेत् ॥२२॥

त्रिरात्रेण वशं याति मृत्युं तं नाऽत्र संशयः ।
लिखित्वा प्रतिमां शत्रोः स-तालेन हरिद्रया ॥२३॥

लिखित्वा हृदि तन्नाम तं ध्यात्वा प्रजपेन्मनुम् ।
एकविंशद्दिनं यावत् प्रत्यहं च सहस्त्रकम् ॥२४॥

जप्त्वा पठेत्तु कवचं चतुर्विंशतिवारकम् ।
संस्तम्भो जायते शत्रोर्नाऽत्र कार्या विचारणा ॥२५॥

विवादे विजयस्तस्य सङ्ग्रामे जयमाप्नुयात् ।
श्मशाने च भयं नास्ति कवचस्य प्रभावतः ॥२६॥

नवनीतं चाऽभिमन्त्र्य स्त्रीणां दद्यान् महेश्वरि! ।
बन्ध्यायां जायते पुत्रो विद्या-बल-समन्वितः ॥२७॥

श्मशानाङ्गारमादाय भौमे रात्रौ शनावथ ।
पादोदकेन स्पृष्ट्वा च लिखेल्लौह-शलाकया ॥२८॥

भूमौ शत्रोः स्वरूपं च हृदि नाम समालिखेत् ।
हस्तं तद्धृदये दत्वा कवचं तिथि-वारकम् ॥२९॥

ध्यात्वा जपेन्मन्त्रराजं नवरात्रं प्रयत्नतः ।
म्रियते ज्वरदाहेन दशमेऽह्नि न संशयः ॥३०॥

भूर्जपत्रेष्विदं स्तोत्रमष्टगन्धेन संलिखेत् ।
धारयेद्दक्षिणे बाह्रौ नारी वामभुजे तथा ॥३१॥

सङ्ग्रामे जयमाप्नोति नारी पुत्रवती भवेत् ।
ब्रह्मास्त्रादीनि शस्त्राणि नैव कृन्तन्ति तं जनम् ॥३२॥

सम्पूज्य कवचं नित्यं पूजायाः फलमालभेत् ।
वृहस्पतिसमो वाऽपि विभवे धनदोपमः ॥३३॥

कामतुल्यश्च नारीणां शत्रूणां च यमोपमः ।
कवितालहरी तस्य भवेद् गङ्गा प्रवाहवत् ॥३४॥

गद्य-पद्यमयी वाणी वेद् देवी प्रसादतः ।
एकादशशतं यावत्पुरश्चरणमुच्यते ॥३५॥



पुरश्चर्याविहीनं तु न चेदं फलदायकम् ।
न देयं परशिष्येभ्यो दुष्टेभ्यश्च विशेषतः ॥३६॥

देयं शिष्याय भक्ताय पञ्चत्वं चाऽन्यथाऽऽप्नुयात् ।
इदं कवचमज्ञात्वा भजेद् यो बगलामुखीम् ।
शतकोटि जपित्वाऽपि तस्य सिद्धिर्न जायते ॥३७॥

दाराढ्यो मनुजोऽस्य लक्षजपतः प्राप्नोति सिद्धिं परां
विद्यां श्रीविजयं तथा सुनियतं धीरं च वीरं वरम् ।
ब्रह्मास्त्राख्यमनुं विलिख्य नितरां भूर्जेऽष्टगन्धेन वै
धृत्वा राजपुरं व्रजन्ति खलु ये दासोऽस्ति तेषां नृपः ॥३८॥

इति विश्वसारोद्धारतन्त्रे पार्वतीश्वरसंवादे
बगलामुखीकवचं समाप्तम् ।

卐 卐 卐

## शिव मन्त्र "ऊँ नमःशिवाय" जप का साङ्गोपाङ्ग विधिः

### जप कैसे करना चाहिए-

कोई भी यज्ञोपवीति दीक्षित व्यक्ति सन्ध्या वन्दनादि करके पूजन सामग्री एकत्र करलें जैसे-गंगाजल (जल) फूलमाला, बेलपत्र, अक्षत, तिल, चन्दन (अबीर) हर्रे, घी, रूई, दीपक, अगरबत्ती, मौली, जनौ, पान, सुपाड़ी, कुश, आसन, कोसी पंचपात्र पूजन का छिपली सलाय इत्यादि।

प्रथम तिलकादि करके, शुद्धासन पर पूर्वाभिमुख या उत्तराभिमुख बैठकर तिलक करके शिखा बांधकर सन्ध्या वन्दनादि से निवृत्त होकर धूपदीप जलाकर-

### तीनबार आचमन करें-

ऊँ केशवाय नमः । ऊँ नारायणाय नमः । ऊँ माधवाय नमः होंठ पोंछकर बोलें ऊँ हृषीकेशाय नमः। हाथ धो लें । बांये हाथ में जल लेकर दाहिने हाथ के तत्वमुद्रा से (अंगूष्ठा अनामिका मिलाकर) मस्तक पर मन्त्र बोलते हुवे छिड़कें-

ऊँ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं सबाह्याभ्यन्तरःशुचिः।।
ऊँ पुण्डरीकाक्षः पुनातु। सभी सामानों पर भी जल छिड़क दें।

### आसन शुद्धि-

आसन के नीचे की भूमि छूते हुए-
ऊँ अस्यासनोपवेशन मन्त्रस्य मेरू पृष्ठ ऋषिः।
सुतलं छन्दः कुर्मो देवता आसनोपवेशने विनियोगः।।



### हाथ जोड़कर-

ऊँ पृथ्वीत्वया धृतालोका देवित्वं विष्णुनाधृता ।
त्वञ्च धारय मां नित्यं पवित्रं कुरु चासनम् ।।

### भूत शुद्धिः- ह्रौं १०८

अक्षत या सरसों लेकर दशो दिशाओं में छिड़कें नाराच मुद्रा से

**ऊँ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिता ।**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।।**

तत्पश्चात पात्र में स्वस्ति (卐) बनाकर दो कसैली में मौली बांधकर स्वस्तिका पर रखें उसके बाद हाथ में पुष्पाक्षतादि लेकर स्वस्ति वाचन पाठ करें । स्वस्तिवाचन मन्त्राः-

**ऊँ आनो भद्राः क्रतवो यन्तु विश्वतो दब्धासोऽअपरीतास ऽउद्भिदः।**
**देवानो यथा सदमिद् वृधेऽ असन्न प्प्रायुवो रक्षितारो दिवे दिवे।।१।।**

**देवानां भद्रा सुमतिर्ऋजूयतां देवाना ँ रातिरभिनोनिर्वर्त्तताम्**
**देवानां ँ सख्यमुपसेदिमाव्वयं देवानऽआयुः प्रतिरन्तु जीवसे ।।**

**तानपूर्व्वया निविदा हूमहे व्वयं भगं मित्रमदितिं दक्षमस्त्रिधम्।**
**अर्य्यमणंव्वरूण ँ सोममश्विना सरस्वतीनः सुभगामयस्करत् ।**

**तन्नो व्वातो मयोभुव्वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः ।**
**तद्ग्रावाणः सोमसुतो मयो भुवस्तदश्विना श्रृणुतं धिष्ण्या युवम्।।**

**तमीशानं जगतस्तस्थुषस्पतिंधियं जिन्वमवसे हूमहे वयम् ।**

पूषा नो यथा व्वेदसामसद्वृधे रक्षिता पायुरदब्धःस्वस्तये ॥

स्वस्तिन इन्द्रोवृद्धश्रवाः स्वस्तिनः पूषा व्विश्ववेदाः ।
स्वस्तिनस्तार्क्ष्यो ऽ अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥

पृषदश्वा मरुतः पृश्निमातरः शुभंय्यावानोव्विदथेषु जग्मयः।
अग्निजिह्वामनवः सूरचक्षसोव्विश्वेनो देवाऽअवसागमन्निह॥

भद्रं कर्णेभिः श्रृणुयाम् देवाभद्रं पश्येमाक्षभिर्य्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा ७ँ सस्तनूभिर्व्व्यशेमहि देवहितं यदायुः॥८॥

शन्नमिन्नु शरदोऽअन्ति देवायत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्तिमानो मद्ध्या रीरिषता युर्गन्तोः॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपिता स पुत्रः।
विश्वेदेवाऽ अदितिः पञ्चजनाऽ अदितिर्ज्जा तमदितिर्ज्जनित्वम्
द्यौः शान्तिरन्तरिक्ष ७ँ शान्तिः पृथिवीशान्तिरापः शान्ति रोषधयः
शान्तिः । व्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्ति :

सर्व्वं ७ँ शान्तिः शान्तिरेवशान्तिः सा मा शान्तिरेधि ॥११॥
यतोयतः समीहसे ततो नोऽ अभयं कुरु ।
शन्नः कुरु प्प्रजाभ्योऽभयं नः पशुभ्यः॥
गणानात्वा गणपति ७ँ हवामहे प्रियाणां त्वा प्रियपति ७ँ हवामहे
निधीनां त्वा निधिपति ७ँ हवामहे व्वसो मम।
आहमजानि गर्भधमात्वमजासिगर्भधम् ।
अम्बेऽ अम्बिकेऽ म्बालिके न मानयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ।
ॐ सुशान्तिर्भवतु ॥ पुष्पाक्षत गणेशाम्बिका वा पत्ता पर छोड़ दें।



हाथ जोड़कर-

ॐ श्री मन्महागणाधिपतये नमः । ॐ लक्ष्मीनारायणाभ्यां नमः। ॐ उमामहेश्वराभ्यां नमः । ॐ वाणीहिरण्यगर्भाभ्यां नमः । ॐ शचीपुरन्दराभ्यां नमः । ॐ मातृपितृचरण कमलेभ्यो नमः । ॐ इष्ट देवताभ्यो नमः । ॐ कुलदेवताभ्यो नमः । ॐ ग्रामदेवताभ्यो नमः। ॐ स्थानदेवताभ्यो नमः । ॐ वास्तुदेवताभ्यो नमः । ॐ सर्वेभ्यो देवेभ्यो नमः । ॐ सर्वाभ्योदेविभ्यो नमः । ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः। ॐ सिद्धिबुद्धि सहिताय श्रीमन्महागणाधिपतये नमः । ॐ एतत् कर्म प्रधान देवता अमुक देवाय नमः ) साम्बसदाशिवाय नमः ॥ इति नमस्कृत्य ॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो विनायकः।
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥२॥
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे संङ्कटे चैव विघ्नस्तस्य न जायते ॥३॥
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनंध्यायेत् सर्वविघ्नोपशान्तये ॥४॥
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥५॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थ साधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तुते ॥६॥
सर्वदा सर्वकार्येषु नास्तितेषाममङ्गलम् ।

येषां हृदिस्थो भगवान मङ्गलायतनो हरिः ॥७॥

तदेवलग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि

लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥९॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्धुवा नीतिर्मतिर्मम ॥१०॥

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥११॥

स्मृतेसकलकल्याणभाजनं यत्र जायते ।
पुरूषं तमजं नित्यं व्रजामि शरणं हरिम् ॥१२॥

सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः ।
देवा दिशन्तु नः सिद्धिं ब्रह्मेशान जनार्दनाः ॥१३॥

विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम् ।
वन्दे काशी गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥१४॥

वक्रतुण्ड महाकाय कोटि सूर्य समप्रभ ।
निर्विघ्नं कुरु मे देव सर्व कार्येषु सर्वदा ॥१५॥

विनायकं गुरूंभानुं ब्रह्मविष्णु महेश्वरान् ।
सरस्वतीं प्रणम्यादौ सर्वकार्यर्थ सिद्धये ॥१६॥

ॐ सोमंराजानं वरुणमग्निमम्बारभामहे ।
आदित्यं विष्णुं सूर्यं ब्रह्माणञ्च वृहस्पतिम् ॥१७॥

ॐ पूर्वोत्तरे प्रज्वलिकानिधाने सदा वसन्तं गिरिजा समेतम्



सुराऽसुराराधित पादपद्मं श्री बैद्यनाथंतमऽहम् नमामि ।

## प्रणाम करके सङ्कल्प वाक्य बोलें।

ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्यश्री ब्रह्मणोह्नि द्वितीय परार्द्धे श्री श्वेतवाराहकल्पे सप्तमे वैवस्वत मन्वन्तरे अष्टाविंशतितमे कलियुगस्य कलि प्रथमचरणे जम्बु द्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैक देशान्तर्गते अङ्ग प्रदेशे गंगायाः दक्षिणदिग्भागे सागरस्य उत्तरस्यां हरितकीवने विक्रमशके बौद्धावतारे अमुक संवत्सरे अमुकायने अमुकऋतौ अमुकतिथौ अमुकवासरे अमुक नक्षत्रे अमुक योगे अमुक करणे अमुक राशिस्थिते सूर्ये अमुक राशिस्थिते चन्द्रे अमुक राशिस्थिते भौमे अमुके राशिस्थिते बुधे अमुक राशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथा स्थानस्थितेषु सत्सु एवं ग्रहगुणगण विशिष्टायां शुभपुण्यवेलायां अमुक गोत्रः ( स्वार्थे प्रथमान्तः-गोत्रः, परार्थे-षष्ठ्यन्तः-गोत्रस्य ) अमुक शर्मा ( प्रथमायां-वर्माऽहम्-षष्ठ्यां शर्म्मणः वर्म्मणः गुप्तस्य, दासस्य ) ममशरीरोपस्थित जन्मकालिक जन्मलग्नावधिक वर्षकालिक वर्षलग्नावधिक गोचर कालिक गोचर लग्ना वधिक संसूचितं संसूचयिष्यमाणं यत्र तत्र दुष्टस्थान स्थित सूर्यादिनवग्रहोपग्रह शान्त्यर्थं कायिक वाचिक मानसिक ज्ञाताज्ञात इह जन्मनि जन्मान्तरे वा सकलपापक्षयार्थं चतुर्थ अष्टम् द्वादशभाव स्थित् केचित् विरुद्ध क्रूर ग्रहाः तैःशान्त्यर्थं तृतीय एकादशभावस्थित शुभग्रहफलप्राप्त्यर्थं वाह्याभ्यन्तर सकल शत्रून् पराजयार्थं दैहिक दैविक भौतिक आधिदैविक आधिभौतिक पञ्चविधताप परिहारार्थं श्री श्री अमुक देव प्रसादात् दीर्घायुरारोग्यैश्वर्याभिवृद्ध्यर्थं धन-

**धान्य समृद्ध्यर्थं ( व्यापारे महतीलाभार्थं भूमि भवन** वाहनादि **प्राप्त्यर्थं ) अप्राप्त लक्ष्मीः प्राप्त्यर्थं तस्याः लक्ष्म्याः** चिरकाल **संरक्षनार्थञ्च श्री श्री अमुक देव प्रीत्यर्थं अमुक मन्त्रस्य सपादलक्ष ( अमुक सहस्र लक्षवा ) संख्यकजपं तथा च ( हवनादि** विकल्पे **तद्दशांश द्विगुणितंकृत्य ब्राह्मण द्वारा ( यथा संख्यक ब्राह्मणैः ) अद्यारभ्ययथाकाल पर्यन्तमहं कारयिष्ये ( परार्थे-कारयिष्यामि ) अक्षततिल गणेश अम्बिका पर छोड़े ।**

**नोट :** यदि जप करने वाला स्वयं अपने लिये जप करता है एवं स्वयं फल चाहता है तो कर्त्ता में प्रथमा एवं क्रिया में करिष्ये का प्रयोग करें। यदि संकल्प स्वयं करे दूसरे के कल्याण के लिए तो कर्त्ता में षष्ठी का प्रयोग करें एवं क्रिया में करिष्यामि, यदि संकल्प करने वाला दूसरे ब्राह्मण से करावे एवं स्वयं का ना होकर दूसरे का कल्याण चाहता है तो कर्त्ता में षष्ठी एवं क्रिया में कारयिष्यामि बोलें, यदि संकल्प करने वाला दूसरे से जपादि कर्म करवाता है तो क्रिया में णिजन्त अर्थात् स्वयं फल प्राप्ति में कारयिष्ये दूसरे के फल प्राप्ति में कारयिष्यामि का प्रयोग करें । पुनः हाथ में अक्षत जल लेकर बोलें-तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणेशाम्बिकयोः पूजनं अमूकदेव पूजनं ब्राह्मण वरणञ्चाहं करिष्ये। अक्षत जल छोड़ें।........पुनः अक्षत लेकर-

**ॐ यज्जाग्रतोदूरमुदैतिदैवन्तदुसुप्तस्य तथैवैति ।**
**दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनः शिव सङ्कल्पमस्तु ॥**

अक्षत छोड़े। हाथ जोड़कर-

**ॐ मन्त्रार्थाः सफलासन्तु पूर्णाः सन्तुमनोरथाः।**
**शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥**



## अयं कर्मारभ्यः शुभाय भवतु ॥

तत्पश्चात् गणेशाम्बिका का आवाहन पूजन करें ।
श्री गणेश का ध्यान-

**ॐ एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम् ।**
**पाशाङ्कुशधरंदेवं मोदकान्विभ्रतङ्करैः ॥**
**रक्तपुष्पमयीम्मालाङ्कण्ठे हस्ते परां शुभाम् ।**
**भक्तानां वरदं सिद्धिबुद्धिभ्यां सेवितं सदा ॥**
**सिद्धिबुद्धिप्रदं नृणान्धर्मार्त्थकाममोक्षदम् ।**
**ब्रह्मरूदहरीन्दाद्यैस्संस्तुतम्परमर्ष्बिभिः ॥**

श्री दुर्गा ध्यान-

**ॐ विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां ।**
**कन्याभिः करवालखेटविलसद्धस्ताभिरासेवितां ॥**
**हस्तैश्चक्रगदासिखेट विशिखाश्चापं गुणं तर्जनीं ।**
**विभ्राणामनलात्मिकां शशिधरां दुर्गांत्रिनेत्रां भजे ॥**

इस प्रकार गणेश अम्बिका का ध्यान करके पूजन करके ब्राह्मणों का वरण करें । हाथ में धोती, चादर, आसन, कोसी, पञ्चपात्र, पान, सुपाड़ी, जनौ, पैसा, अक्षत, कुश अंगुठी ( पवित्री ) गोमुखी, रुद्राक्षमाला इत्यादि लेकर ब्राह्मण का वरण करें ।

ॐ अद्य अमुक गोत्रः अमुक शर्माऽहम ( वर्माऽहम गुप्तोऽहम ) मत् सङ्कल्पिते ॐ नमः शिवाय इति पञ्चाक्षरी श्री शिवमन्त्रस्य सपाद लक्ष जप कर्मणि एभिः विष्टर ताम्बूल पूगीफलपुष्पाक्षत अंगुलीयक यज्ञोपवीतद्रव्यवस्त्रादिभिः अमुक गोत्रं अमुक शर्माणं ब्रह्मणं अद्यारभ्य

यथाकाल पर्यन्तं जप कर्मकर्त्तुम् भवन्तमहं वृणे ॥ ( २ब्राह्मणों में-अमुक गोत्रौ अमुक शर्माणौ ब्राह्मणौ भवन्तौ अहं वा भवन्तावहं वृणे ) । उससे अधिक ब्राह्मणों के होने पर अमुक गोत्रान् अमुक शर्म्मणः भवतः अहं वृणे एक ब्राह्मणमें वृतोऽस्मि २ ब्राह्मणों में वृतास्वः दो से अधिक ब्राह्मणों में वृताः स्मः इति प्रतिवचनम् ॥

१. में - यथा विहीतं कर्म कुरु-यथाज्ञानं करवाणि इति प्रतिवचनम्

२. में - यथाविहीतं कर्मकुरुतम्-यथाज्ञानं करवाव ।

३. बहुसंख्यक में-यथाविहीतं कर्म कुरुत-यथा ज्ञानं करवाम ॥

**ततः ब्राह्मणानां हस्तेषु रक्तसूत्रेण ( मौलिना )**
**रक्षा बन्धनं तिलकादिकं कुर्यात् ।**
**ततः यजमानानामपि हस्तेषु रक्षाबन्धनं कुर्यात् ॥**
**तत्पश्चात् न्यासादिकं कृत्वा शिवमन्त्र जपं कुर्यात्**

## यथा स्थान पूजादि सामग्री को स्थापति कर धूप-दीप जलाकर हाथ में सचन्दन फूल लेकर कूर्म मुद्रा से भगवान शंकर का ध्यान करें

### ध्यानम्

**ॐ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारु चन्द्रा वतंसं।**
**रत्नाकल्पो ज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।**
**पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं**
**विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रंत्रिनेत्रम् ॥**

ध्यानीय पुष्प को अपने मस्तक पर स्थापित कर नासाग्र से वायु



द्वारा तेजः पुञ्जस्वरूप भगवान शंकर को हृदय कमलपर विराजमान कर मानसिक पूजन करें-

ॐ लं पृथिव्यात्मकं गन्धं समर्पयामि ।

ॐ हं आकाशात्मकं पुष्पं समर्पयामि । ॐ यं वाय्वात्मकं धूपं समर्पयामि। ॐ रं तेजसात्मकं दीपं समर्पयामि । ॐ वं अमृतात्मकं नैवेद्यं समर्पयामि। ॐ सं सर्वात्मकं मन्त्र पुष्पं समर्पयामि ॥

हाथ में जल लेकर-

### विनियोग

"ॐ नमः शिवाय" अस्य शिव पञ्चाक्षरी मन्त्रस्य वामदेव ऋषिः। पंक्तिश्छन्दः। ईशानो देवता। ॐ बीजाय । नमः शक्तिः । शिवायेति कीलकम् । चतुर्विध पुरुषार्थ सिद्ध्यर्थे जपेन्यासे च विनियोगः ।

### ऋष्यादिन्यास :

ॐ वामदेवर्षये नमः-शिरसि । ॐ पंक्तिश्छन्दसे नमः-मुखे । ॐ ईशानदेवतायै नमः-हृदये । ॐ नमः शक्तये नमः-पादयोः । ॐ शिवायेति कीलकाय नमः-नाभौ। ॐ विनियोगा नमः-सर्वाङ्गे । जिस अंग का उच्चारण हुआ है उस अंग का स्पर्श हाथ से करें ।

### अथ हृदयादि न्यासः

ॐ हृदयाय नमः । ॐ नं शिरसे स्वाहा । ॐ मं शिखायै वषट् । ॐ शिं कवचाय हूम् । ॐ वां नेत्रत्रयाय वौषट् । ॐ यं अस्त्राय फट्।

### अथ करन्यास :

ॐ अंगुष्ठाभ्यां नमः। ॐ नं तर्जनीभ्यां स्वाहा । ॐ मं मध्यमाभ्यां वषट्।

ॐ शिं अनामिकाभ्यां हूम्। ॐ वां कनिष्ठिकाभ्यां वौषट्। ॐ यं करतलकर पृष्ठाभ्याम् अस्त्राय फट् ।

ॐ नमः शिवाय इस मन्त्र से महाव्याहृति करें अपने चारों तरफ चुटकी बजाते हुवे दिक् बन्धन करें प्राणायाम करें १६/६४/३२ मातृका पुटित मन्त्र से ( अकार से क्षकार तक बोलकर बीच में ॐ नमः शिवाय बोलकर विलोम रीति से क्षकार से अकार तक ) मन्त्र शोधन कर पुनः पुष्प लेकर कूर्ममुद्रा से भगवान शंकर जी का ॐ ध्यायेन्नित्यमः इत्यादि से ध्यान कर हृदय कमलपर विराजमान, कल्पित भगवान शंकर को प्रश्वास द्वारा न्रासाग्र से बाहर निकाल हाथ में स्थापित ध्यानीय पुष्प को किसी पात्र पर स्थापित कर आवाहनादि मुद्रा के द्वारा आवाहन प्राण प्रतिष्ठाकर वाह्यपूजा पाद्यादि से पूजनकर माला की पूजा करके जप प्रारम्भ करें ।

## शिवपूजन प्रारम्भः

ध्यान के बाद प्राण प्रतिष्ठा-
ॐ मनोजूतिर्ज्जुषतामाज्यस्य वृहस्पतिर्य्यज्ञमिमं तन्नो
त्वरिष्टं य्यज्ञꣳ समिमंदधातु । विश्वेदेवा सऽइहमादयन्ता-
मों ३ प्रतिष्ठ ॥ भूर्भुवः साम्बसदाशिवम् आवाहयामि स्थापयामि
पूजयामि ॥ चावल छिड़कें ॥

## आवाहनम्-

दोनो हाथ से आवाहनीयमुद्रा से-
ॐ त्रिपुरान्तकरंदेव चूडाचन्द्र महाद्युतिम् ।
गजचर्म परिधानं शिवमावाहयाम्यहम् ॥
श्री भगवते साम्बसदा शिवाय नमः आवाहनार्थे पुष्पं समर्पयामि ।



## आसनम्-

ॐ विश्वेश्वर महादेव महेशान परात्पर ।
मया समर्पितं रम्यमासनं प्रतिगृह्यताम् ॥
आसनार्थे अक्षतानवा पुष्पाणि समर्पयामि ॐ नमः शिवाय नमः

## पाद्यम्-जल से-

ॐ गङ्गोदकं निर्मलं च सर्वसौगन्ध्य संयुतम् ।
पाद प्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ।
श्री भगवते साम्बसदाशिवाय नमः पाद्यं पादयोः समर्पयामि ॥

## अर्घ्यम्-जल से-

ॐ नमस्ते देवदेवेश नमस्ते करुणाम्बुधे ।
करुणां कुरु मे देव गृहाणार्घ्यं नमोऽस्तुते ॥
श्री भगवते साम्बसदाशिवाय नमः हस्ते अर्घ्यं समर्पयामि ॥

## आचमनीयम्-जल से

ॐ सर्वतीर्थ समायुक्तं सुगन्धिं निर्मलं जलम् ।
आचम्यतां मयादत्तं गृहीत्वा परमेश्वर ॥
श्री भगवते साम्ब सदाशिवाय नमः मुखे आचमनीयं जलं समर्पयामि

## स्नानीयम्-जलम्-

ॐ गङ्गा सरस्वती रेवा पयोष्णी नर्मदा जलैः ।
स्नापितोऽसि मयादेव ततः शान्तिं प्रयच्छ मे ॥
श्री भगवते साम्ब सदाशिवाय नमः स्नानीयं जलं सर्वाङ्गे च समर्पयामि
वस्त्रम् । यज्ञोपवीतम् च समर्पयामि साम्ब सदाशिवाय नमः ।

## गन्धं ( चन्दनम् )

ॐ श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥
श्री भगवते साम्ब सदाशिवाय नमः गन्धं, चन्दनं समर्पयामि ।

## अक्षताः-

ॐ अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः ।
मया निवेदिता भक्त्या गृहाण परमेश्वर ।
श्री भगवते साम्बसदाशिवाय नमः अक्षतान् समर्पयामि
( अक्षत चढ़ावें )

## बिल्वपत्र फूल-

ॐ त्रिदलं त्रिगुणाकारं त्रिनेत्रञ्च त्रयायुधम् ।
त्रिजन्म पापसंहारं बिल्वपत्रं शिवार्पणम् ॥
पुष्पबिल्वपत्राणि समर्पयामि साम्बसदा शिवाय नमः।

## माला-

ॐ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयाऽनीतानि पुष्पाणि गृहाण परमेश्वर ॥
श्री भगवते साम्बसदाशिवाय नमः इमां पुष्पमालां समर्पयामि ॥

## अबीर-गुलाल-बुक्का-हरिद्राचूर्ण-

ॐ अबीरं च गुलालंच हरिद्रादि समन्वितम् ।



नाना परिमलं द्रव्यं गृहाणपरमेश्वर ॥

## धूपम्-

ॐ वनस्पति रसोद् भूतो गन्धाढयो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रति गृह्यताम् ॥
श्री भगवते साम्बसदा शिवाय नमः धूपम् आघ्रापयामि ।

## दीपम्-

ॐ साज्यंच वर्तिसयुक्तं वह्निना योजितं मया ॥
दीपं गृहाणदेवेश त्रैलोक्यतिमिरापहम् ॥
श्री भगवते साम्बसदा शिवायनमः दीपं दर्शयामि ( हाथ धोलें )

## नैवेद्यम्-

ॐ नैवेधं गृह्यतां देव भक्तिं में ह्यचलां कुरु ।
ईप्सितं मे वरं देहि परत्र च परां गतिम् ॥
श्री भगवते साम्बसदा शिवाय नमः, नैवेद्यं निवेदयामि ॥
नैवेद्यान्ते आचमनीयं जलं पुनराचमनीयं जलं समर्पयामि साम्बसदा शिवाय नमः॥ मुखवासार्थे ताम्बूलं पूगीफलं दक्षिणाद्रव्यञ्च समर्पयामि साम्बसदाशिवाय नमः।
ततः जप प्रारम्भ करें जप के पश्चात् हाथ में जल लेकर-
ॐ गुह्याति गुह्य गोप्तात्वं गृहाणास्मृत कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर ।
पुनः न्यास ध्यान पूजन करके, पुष्पाञ्जलि-
फूल लेकर-ॐ नाना सुगन्धिपुष्पाणि यथा कालोद्भवानि च ।
पुष्पाञ्जलिर्मया दत्त गृहाण परमेश्वर ॥

श्री भगवते साम्बसदाशिवाय नमः, मन्त्र पुष्पाञ्जलिं समर्पयामि

## प्रणाम-

ॐ वन्दे देवमुमापतिं सुरगुरूं वन्दे जगत्कारणम् ।
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ॥
वन्दे सूर्यशशाङ्क वह्निनयनं वन्दे मुकुन्द प्रियम ।
वन्दे भक्तजनाश्रयञ्च वरदं वन्दे शिवं शंकरम् ॥

## क्षमा प्रार्थना-

ॐ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ।
हाथ में जल लेकर ॐ अनया पूजया साम्बसदाशिवः प्रीयताम् नमम्, एभिर्जपाख्यानैः साम्बसदाशिवः प्रीयताम् नमम ।

## विसर्जन-

ॐ यान्तु देवगणाः सर्वे पूजामादाय मामकीम् ।
इष्टकाम प्रसीद्ध्यर्थं पुनरागमनं कुरू ॥
पूजन पात्र को दाहिने हाथ से हिला दें तथा संहार मुद्राका प्रदर्शन करें। तेजः पुञ्जस्वरुप भगवान साम्बसदाशिव का अपने हृदय कमल पर विराजमान करें इति ।

卐 卐 卐

# मन्त्रानुष्ठान प्रकाशः

## शुद्धि पत्र

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| मुख पृष्ठ | ८ | विरचितम् | विरचितम् संकलितञ्च |
| 3 | १ | संकल्पस्य को | संकल्पस्य का |
| 5 | ६ | मुद्राविना | मुद्रांविना |
| 11 | ३ | दधात्तथा | दद्यात्तथा |
| 14 | १२ | ब्रह्मनांश | ब्राह्मणांश |
| 16 | ७ | वार्मा | वर्मा |
| 17 | २ | गायत्रीं छन्दो | गायत्री छन्दो।श्री गणेश देवता |
| 17 | ५ | मुखे के बाद | श्री गणेश देवतायै नमः हृदि |
| 17 | ११ | वषट | वषट् |
| 18 | ३ | दंव्यान | दैत्यान् |
| 20 | २१ | मि नमः वामजाकृते / | वं नमः वामजानुवृत्ते |
| 21 | १८ | उर्वो | उर्वो। |
| 23 | ४ | सिद्धयर्थे | सिध्द्यर्थे |
| 23 | ८ | अङ्गुष्ठाभ्यां | अंगुष्ठाभ्याम् |
| 25 | ६ | मेऽवताछुति | मेऽवताच्छ्रुति |
| 25 | १७ | घातक | घातकः |
| 25 | २२ | पूर्व | पूर्वे |
| 26 | ३ | शम्भुस्थान्मां | शम्भुरक्षेन्मां |
| 26 | ११ | सर्वतः..............ॐ | सर्वतः पातु ॐ |
| 26 | १८ | कवचमादरात | कवचमादरात् |
| 28 | १८ | .......................... | त्वामहम् शरणगतः अस्त्राय फट् ।. अस्त्र श्री पादुकां पूजयामि तर्पयामि नमः ॥ |

| | | | |
|---|---|---|---|
| 31 | ६ | हूम | हूम् |
| 31 | १२ | —............ | ॐ गं'' नमः हृदि |
| 39 | २ | अंगुष्ठाभ्याम नमः | अंगुष्ठाभ्याम् नमः । |
| 39 | २ | हूं | हूं, मध्यमाभ्यां नमः |
| 40 | ३ | चत्वारिशद् | चत्वारिंशद् |
| 48 | १५ | काशो | काशीं |
| 51 | २२ | ब्रह्मणं | ब्राह्मण |
| 53 | १२ | ॐ विनियोग नमः | विनियोगाय नमः |
| 54 | ८ | ध्यायेनित्यमः | ध्यायेनित्यम् |
| 56 | २ | प्रतिगृह्यताम् | प्रतिगृह्यताम् । |
| 56 | ४ | कुङ्कमाम्ता: | कुंकुमाक्ता। |



तत्रान्तरे- नमस्कारं समुद्धृत्य वान्तं नेत्रसमन्वितम् ।
वरुणं मुखवृत्तं च वायुं ललाट संयुतम् ।
अमुं पञ्चाक्षरं मत्रं पञ्चकाम फलप्रदम् ।
प्रणवादिर्यदा देवि तदामन्त्रः षडक्षरः॥
शिव जी का पञ्चाक्षरी में प्रणव जोड़ने से षडक्षरी मन्त्र कहलाता है।

卐 卐 卐

## अथ शीतलामन्त्र प्रयोगः

चेचक आदि रोगों में शीतला मन्त्र प्रयोग करने से रोगी को शीतलता एवं आराम मिलता है।

### शीतला ध्यानम्-

ॐ दिग्वाससं मार्जनिकांचशूर्पकर द्वये सन्दधती घनाभाम् ।
श्री शीतलां सर्वरुजार्तिनिष्टो रक्ताङ्गरागस्त्रजमर्चयामि ॥

### मन्त्र-

ॐ ह्रीं श्रीं शीतलायै नमः ॥

### विनियोग :-

ॐ अस्य श्री शीतला देवी मन्त्रस्य उपमन्युः ऋषिः। वृहती छन्दः । श्री शीतला देवता ममाभीष्ट- सिद्धयर्थे जपेन्यासे च विनियोगः ॥

### करन्यास :

ॐ ह्रां श्रां अगुष्ठाभ्यां नमः । ॐ ह्रीं श्रीं तर्जनीभ्यां नमः । ॐ ह्रूं श्रूं

मध्यमाभ्यां नमः । ॐ हैं श्रैं अनामिकाभ्यां नमः । ॐ हौं श्रौं कनिष्ठिकाभ्यां नमः । ॐ हः श्रः करतलकर पृष्ठाभ्यां नमः।
एवं क्रमेण हृदयादिन्यासं विधाय दिग्वन्धनं महाव्याहृतिं प्राणायामञ्च कृत्वा पुनः ध्यानावाहनवाह्यपूजाञ्च कृत्वा जपं कुर्यात् ॥

卐 卐 卐

यदि पाठकगण को इस पुस्तक से कुछ लाभ मिला तो आगे मैं निम्नलिखित पुस्तकों को वा पद्धतियों को यथा ज्ञान आपलोगों के सामने शीघ्रातिशीघ्र प्रस्तुत करुंगा ।

यथा-गणेश पूजा पद्धति, सरस्वती पूजा, मनसा पूजा, काली पूजा, कार्त्तिक पूजा, दुर्गा पूजा पद्धति, यज्ञ पद्धति, कुम्भविवाह, विष्णु विवाह, गृहारम्भ तथा गृहप्रवेश पद्धति, मन्दिर प्रतिष्ठा पद्धति आदि।

## सतो गुण ग्रहितारो दोषं पश्यन्ति दुर्जनाः ।

सज्जन व्यक्ति दूसरे के गुण को ही ग्रहण करते हैं, दुष्ट व्यक्ति दुसरे में दोष ही देखते हैं ।

**कृतज्ञता ज्ञापन :**

दरभंगा निवासी **श्री परमानंद झा** ( सेवा निवृत, अभियंता ) एवं **श्री राजानाथ झा** ( आपूर्ति पदा० ) ने पुस्तक प्रकाशन में अपना अप्रतिम सहयोग प्रदान किया है जिसके लिए मैं उनके प्रति कृतज्ञता प्रकट करता हूँ । -पं० जवाहर लाल करमहे

## ॥ इति शुभम् ॥